॥ श्रीः ॥

बुधवरश्रीमदप्पय्यदीक्षितविरचितः

# कुवलयानन्दः ।

श्रीमत्कविवरजयदेवविरचितस्वमूल-

## चन्द्रालोकसहितः ।

श्रीमत्तत्सदुपाख्यवैद्यनाथसूरिविरचितया

## अलङ्कारचन्द्रिकाव्याख्यया

च विभूषितः ।

स च

रावेरग्रामनिवासिगोविन्दशास्त्रिणा संशोधितः,

क्षेमराज-श्रीकृष्णदासश्रेष्ठिना

मुम्बय्यां

( खेतवाडी ७ वीं गली खम्वाटा लैन )

स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितः ।

संवत् १९६८, शके १८३३.

# संस्कृत साहित्य पाठावलिः ।

## द्वितीयो भागः ।



### पूर्व पीठिका

### प्रथमः पाठः ।




वन्दना ।

नमो विश्वसृजेपूर्वं विश्वन्तदनु बिभ्रते ।
अथ विश्वस्य संहर्त्रे तुभ्यन्त्रेधा स्थितात्मने ॥१॥
हृदयस्थमनासन्न–मकामं त्वान्तपस्विनम् ।
दयालुमनघ स्पृष्टं पुराणमजरं विदुः ॥२॥
त्वय्यावेशितचित्तानान्त्वत्समर्पितकर्म्मणाम् ।
गतिस्त्वं वीतरागाणामभूयः सन्निवृत्तये ॥३॥

कालिदासः





# द्वितीयः पाठः ।

## ग्रन्थानुशीलनम् ।

१ यावन्मनुष्यस्य कयाऽपि रीत्या कार्य्याकार्य्यज्ञानन्न भवति, तावत्स 'अज्ञ इति,' 'जड़ इति' च कथ्यते । न केवलं कठिन-प्रसङ्गेष्वेव स किङ्कर्तव्यताया विमुह्यत्यवसीदतिच, साधारणेषु दैनिककार्य्येष्वपि तस्य निश्चितं हस्तपादन्न प्रसरति । अबुद्धिमानविद्वांश्च नरः सर्वथाऽश्मसमान एव निष्क्रियः तिष्ठति । यस्तु धीमानपि अपठित स्सोऽपि शंकितहृदयो, न कर्म्मणि निश्चयेन प्रवर्तते ।

२ अतः नरस्य कार्य्याकार्य्ययोः ज्ञानमावश्यकम् । अस्मत्पूर्वैर्जनैः कार्य्याकार्य्यविषये स्वानुभवाः स्वग्रन्थेषु सन्निवेशिताः । तेभ्यः अस्माभिः अवश्यंज्ञानम्प्राप्तव्यम् । येऽत्र जगति अज्ञानवन्तो भवन्ति, ते न कुत्रापि सम्मान्यन्ते, सर्वत्रापि मूर्खा इति तिरस्क्रियन्ते । विद्वान् एव सर्वदा पूज्यते, तमेव सर्वे मानयन्ति

३ अतः सर्वैर्जनैः बाल्यकाले विद्याध्ययने परिश्रमो विधेयः । ग्रन्थेषु पूर्वजानां विद्यमानानाञ्च विदुषामनुभवा विहिता सन्ति, तेषाञ्ज्ञानादेव नरे बुद्धिमत्त्वमायाति ।

———

# तृतीयः पाठः

## उपाय कथा।

१ अस्ति कस्मिंश्चित्प्रदेशे महान्न्यग्रोधपादपः। तत्र वायस-दम्पती प्रतिवसतः स्म। अथ तयोः प्रसवकाले वृक्षविवरात् निष्क्रम्य कृष्णसर्पः सदैव तदपत्यानि भक्षयति। ततस्तौ निर्वेदात् अन्यवृक्ष-मूलनिवासिनं प्रियसुहृदं शृगालं गत्वा ऊचतुः—"भद्र! किम् एवं-विधे सञ्जाते आवयोः कर्त्तव्यम्भवति। एषतावद्द दुष्टात्मा विवरान्नि-ष्क्रम्य आवयोः बालकान्भक्षयति। तत्कथ्यतान्तद्वधाय कश्चि-दुपायः। उक्तश्च 'ससर्पे च गृहे वासो मृत्युरेव न संशयः'। अस्मा-कमप्यत्रस्थिताना म्प्रतिदिन म्प्राणसंशयः।"

२ शृगाल आह 'न अत्र विषये स्वल्पोऽपि विषादः कार्य्यः। नूनं स लुब्धो न उपायान्तरेण बध्यः स्यात्'। वायस आह 'तत्क-थय कथं स दुष्टो वधमुपैष्यति ? शृगाल आह 'गच्छतु भवान्रा-जाधिष्ठानम्। तत्र कस्यापि धनिनो राजामात्यादेः प्रमादिनः कनकसूत्रं हारं वा गृहीत्वा तत्कोटरे प्रक्षिप। येन सर्पस्तद्ग्रह-णेन वध्यते'।

३ अथ तच्छ्रुत्वात्काकः काकी च तदाकर्ण्य आत्मेच्छयो-त्पतितौ। ततश्च काकी यावत्किञ्चित्सरः प्राप्य पश्यति, तावत्तस्य तटे कनकसूत्रमेकमुपलभते। अथ सा तदादाय स्वगृहाभिमुखम्प्र-

तस्थे। ततः कञ्चुकिनो वर्षवराश्च तन्नीयमानमुपलक्ष्य गृहीतलगुडा सत्वरमनुययुः।

४ काकी अपि सर्पकोटरे तत् कनकसूत्रम्प्रक्षिप्य, दूरं स्थिता। अथ यावत् राजपुरुषाः तं वृक्षमारुह्य तत्कोटरमवलोकयन्ति तावत्कृष्णसर्पप्रसारितभोगस्तिष्ठति। ततस्तं लगुडप्रहारेण हत्वा, कनकसूत्रमादाय यथाऽभिलषितं स्थानम् प्रस्थिताः।

वायसदम्पती अपि तदाप्रभृति सुखेन वसतः। उच्यते च :—

उपायेन हि य च्छक्यन्न तच्छक्यम्पराक्रमैः।
काक्या कनकसूत्रेण कृष्णसर्पो निपातितः।

---

## चतुर्थः पाठः।

### वारिदः।

जातः कुलेऽहं किल वारिदानां,
सूर्य्यः पिता मे, जननी पयोधिः।
धान्यानि वन्यानि च पादपानां,
कदम्बकान्यात्मभवानि लोके॥१॥
अहम्प्रसूतः किल दक्षिणस्यां,
तीव्रातपायान्दिशि वारिनाथे।

समस्तलोकानधिगत्य नित्यं
पयोभिरन्नार्थकरैर्बिभर्मि ॥२॥
मामुत्तरामापतितान्दिशन्ताः,
शैलेयमाला विनतैः शिरोभिः ।
स्ववासिलोकोदरपूरणाय,
धान्यार्थनाः नित्यमहो नमन्ति ॥३॥
कदाचिदाच्छाद्य रविम्प्रदीप्तं,
कदाचिदुद्भाव्य च वज्रदीप्तिम् ।
अहञ्जनानल्पहृदः स्वरूपैः,
स्वकार्य्यलग्नानपि भीषयामि ॥४॥

———

## पञ्चमः पाठः ।

### ईश्वरः

१—इदं यज्जगद्वर्तते, तस्य निर्माता ईश्वरोऽस्ति । । यथा जगति किमपि वस्तु विनाकर्तार न्न उत्पद्यते, तथा इदञ्जगदपि ईश्वरं विना न भवितुं शक्नोति । यथा यो घटं करोति स घटकार उच्यते, घटश्च तं विना न भवितुं शक्नोति, तथैव अयमीश्वरः जगत्कर्ता उच्यते न च तं विना जगद्भवितुं शक्नोति । सर्वम्पर्वत नदी मनुष्यादिकमीश्वरेणैव कृतम् । स एवास्माकं शरीरस्यापि कर्तास्ति ।

२—अत्र जगति कश्चित्सुखी दृश्यते, कश्चिच्च दुःखी। यः साधूनि सत्य भाषणादीनि कर्माणि करोति स सुखी भवति, यस्तु चौर्य्यादीनि दुष्कर्माणि करोति स दुःखी भवति। सर्वश्चेदम्भूमण्डलन्तारा मण्डलञ्च नियमेन प्रचलति। कः सुख दुःख दाता? जगतो नियन्ता च कः? कोऽस्मभ्यम्प्रभाते शीतलमानन्ददञ्च वायुम्प्रवाह्यति? केनास्मत्कृते मनोहराणि दृश्यानि कृतानि? एतत्सर्वमीश्वरस्यैव कार्य्यं जातमस्ति।

३—ये जनाः सत्यभाषणादीनि सत्कर्म्माणि न कुर्वन्ति कदापीश्वर स्तेभ्यः सुख न्न ददाति। तेषामीश्वरः प्रसन्नो न भवति ते सर्वदा दुःखिता एव तिष्ठन्ति। ईश्वरः सर्वदा सज्जनेभ्य एव सुखम्प्रयच्छति। ये सत्यम्भाषन्ते, ब्रह्मचर्य्यम्पालयन्ति, चौर्यं न्न विदधति, परन्न पीड़यन्ति तेषामीश्वरः सुप्रसन्नो जायते, तेभ्यः सुखञ्च प्रयच्छति। तान्सर्वदुःखेभ्यो मोचयति।

———

# षष्ठः पाठः

## विद्यार्थिनः किमुचितम् ?

### ( क )

### मनः संयमः

( १ ) यथा द्वितीयपाठे भवद्भिर्ज्ञातम्भवेत्, विद्यार्थिनो मुख्योद्देश्यमनुशीलनमेवास्ति। परमनुशीलनं स्वतो मनुष्यस्योद्देश्यन्नास्ति, तद्धि मनुष्यजीवनस्य साफल्यहेतुतयैव ग्राह्यमस्ति अध्ययनम् तद्द्वारा मनुष्य जीवन साफल्यंच कथं सम्भवति ? इत्येष प्रश्नः सर्वैरपि विद्यार्थिभिरवश्यं विवेचना विषयीकर्तव्यः। प्राप्य वस्तुनः अधिगमाय कःपन्थ अवलम्बनीयः ? इत्यज्ञात्वैव यदि कश्चित्कर्म्मणि प्रवर्तेत, सोऽवश्यं निष्फल प्रयत्नः स्यात् ।

( २ ) प्रथमन्तावत्सर्वस्मिन्कर्म्मणि फल प्राप्ति कामेन परिश्रमो विधेयः । उद्यममन्तरा न किमपिसिध्यति । सत्यमुच्यते—

‘उद्यमेन हि सिध्यन्ति कार्य्याणि न मनोरथैः ।
नहिसुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ’

यावन्तो महात्मानो अद्यावधि जातास्ते सर्वेऽपि परिश्रमेणोद्यमेन च महात्मत्वमापुः । अनेके शतवर्षाणि तपस्तेपिरे, अपरेयावदायुर्षं गुरून्परिचेरुः । न हि महान्तङ्कष्टमननुभूय गिरिशिरःस्थमिष्टफलङ्कोनापि लब्धुं शक्यते ?

( ३ ) एतावता दृश्यते उद्यमेनैव विद्या कृतकार्य्यता च लभ्यते। स उद्यमः कुत्र विधेयः ?

प्रथमन्तावद्विद्यार्थिना मनोनिग्रहे प्रयत्नः कार्य्यः। मनोनिग्रहस्य यावानेवाधिक उपयोगस्तावत्येव तदुपलब्धौ कठिनता। सत्वभ्यासेन क्रियते। यस्मिन्विषयेऽस्माभिर्मनो निवेशितन्तत्रैव तिष्ठेन्नेतस्ततोविचले दीदृशोऽभ्यास एव मनसो निग्रह उच्यते। न तमन्तरा किमपिगूढं वस्तु बोद्धुं शक्यते, न च किमपि स्मर्तुं शक्यते। स्मृतमपि च विस्मर्य्यते।

( ४ ) द्वितीयोऽभ्यासो धैर्य्यस्य विधेयः। 'सकृन्न सिद्धिमेति चेत् पुनः प्रयत्नमाचर'। यदि प्रयत्नेकृतेऽपि कोपिनिष्फलतामधि गच्छति तर्हि तदर्थम्पुनः प्रयत्नोविधेयः। विश्वामित्रः सकृत्तपोनाशे पुनस्तपश्चचार, पुनरपि तपसि विहते न विरराम, पुनस्तपस्तेपे। बहुशः निष्फलत्वमाप्य, परिश्रम्यचान्ते ब्राह्मणत्वमाप।

क्षीणः क्षीणः पुनः पूर्ण श्चन्द्रमा सुविकीर्त्यते।
उदयान्त निपाताना म्भूम्ना जीवति यज्जगत्॥

———

## सप्तमः पाठः ।

### अतिथि पूजनम् ।

( क )

कश्चित्क्षुद्र समाचारः प्राणिनां काल सन्निभः ।
विचचार महारण्ये घोरः शकुनि लुब्धकः ॥ १ ॥
नैवकश्चित्सुहृत्तस्य न सम्बन्धी न बान्धवाः ।
स तैः सर्वैः परित्यक्तः तेन रौद्रेण कर्म्मणा ॥ २ ॥
ये नृशंसा दुरात्मानः प्राणिनाम्प्राण हिंसकाः ।
उद्वेजनीयाः भूतानां व्याला इव भवन्ति ते ॥ ३ ॥
स पञ्जरकमादाय पाशञ्च लगुडन्तथा ।
नित्यमेव वनं याति सर्वप्राणि विहिंसकः ॥ ४ ॥
अन्येद्यु र्भ्रमतस्तस्य वने कापिकपोतिका ।
जाता हस्तगता तां स प्राक्षिपत्पञ्जरान्तरे ॥ ५ ॥
अथ कृष्णा दिशः सर्वा वनस्थस्याभवन्घनैः ।
वातवृष्टिश्च महती क्षय काल इवाभवत् ॥ ६ ॥
ततः सन्त्रस्त हृदयो कम्पमानो मुहुर्मुहुः ।
अन्विष्यन्त्सपरित्राण माससाद वनस्पतिम् ॥ ७ ॥
मुहूर्तं पश्यते यावद्वियद्विमल तारकम् ।
प्राप्य वृक्षं वदत्येवं योऽत्र तिष्ठति कश्चन ॥ ८ ॥
तस्याहं शरणम्प्राप्तः सपरित्रातुमामिति ।

शीतेन भिद्यमानश्च क्षुधया गत चेतनम् ॥ ९ ॥
अथ तस्य तरोः स्कन्धे कपोतः सुचिरोषितः ।
भार्य्या विरहित स्तिष्ठन् विललाप सुदुःखितः ॥ १० ॥
वात वर्षो महानासीन्नचागच्छति मे प्रिया ।
तया विरहितं ह्येतत् शून्यमद्यगृहम्मम ॥ ११ ॥
पञ्जरस्था ततः श्रुत्वा भर्तुर्दुःखान्वितं वचः ।
कपोतिका सुसन्तुष्टा वाक्य मेतदभाषत ॥ १२ ॥
शृणु ध्यान युत स्तात ! यत्ते वक्ष्याम्यहं हितम् ।
प्राणैरपि त्वया नित्यं संरक्ष्यः शरणागतः ॥ १३ ॥
एष शाकुनिकः शेते तृणावासं समाश्रितः ।
शीतश्च क्षुधार्तश्च पूजामस्मै समाचार ॥ १४ ॥
माचास्मै त्वङ्कुथा शोकम्बद्धा ऽनेनेति मत्प्रिया ।
स्वकृतैरेव बद्धाहं प्राक्तनैः कर्म्म बन्धनैः ॥ १५ ॥

---

## अष्टमः पाठः ।

### बुद्धेर्बलम् ।

( १ )

( १ ) कस्मिँश्चिद्वने भासुरको नाम सिंहः प्रतिवसति स्म । अथासौ वीर्य्यातिरेकान्नित्यमेव अनेकान्मृगशशकादीन्व्य-

पादयन्नोपरराम। अथान्येद्यु स्तद्वनजाः सर्वे सत्त्वा मिलित्वा तमभ्येत्य ऊचुः 'स्वामिन्, किमनेन सकलमृगवधेन ? नित्यमेव यतस्तव एकेनापि मृगेण तृप्तिर्भवति। तत्क्रियतामस्माभिः सह समयधर्मः, अद्यप्रभृति तव अत्रोपविष्टस्य जातिक्रमेण प्रति दिनमेको मृगो भक्षणार्थं समेष्यति। एवङ्कृते तवतावत्प्राण-यात्रा क्लेशं विना भविष्यति, अस्माकम्पुनः सर्वोच्छेदन्न स्यात्'।

( २ ) अथ तेषान्तद्वचनमाकर्ण्य भासुरक आह 'अहो ! सत्यमभिहितम्भवद्भिः। परं यदि अत्रोपविष्टस्य मम नित्यमेव न श्वापदः समागमिष्यति तन्नूनं सर्वानपि व्यापादयिष्यामि'

अथ ते तथैव प्रतिज्ञाय निर्वृत्तिभाजः तत्रैव वने निर्भयम्पर्य्य-टन्ति। एकश्च प्रतिदिनं क्रमेण याति, वृद्धो वा वैराग्ययुक्तो वा शोकग्रस्तो वा, पुत्र कलत्र नाश भीतोवा, तेषाम्मध्यात्तस्य भो-जनार्थं मध्यान्हे उपतिष्ठते।

( ३ ) अथ कदाचित् शशकस्यावसरः समायातः। स समस्त मृगैः प्रेषितोऽनिच्छन्नपि मन्दंमन्दं गत्वा, तस्यवधोपायश्चि-न्तयन्वेलातिक्रमङ्कृत्वा व्याकुलितहृदयो यावद्गच्छति तावन्मार्गे गच्छता कूपः सन्दृष्टः। यावत्कूपे परियाति तावत्कूपमध्ये आत्मनः प्रतिविम्बन्ददर्श। दृष्ट्वाच, तेन हृदये चिन्तितं यद्भव्य उपायोऽस्ति। अहम्भासुरकम्प्रकोप्यस्वबुद्ध्याऽत्र कूपे पातयि-ष्यामि।

( ४ ) अथासौ दिन शेष भासुरकम्प्राप्तः। सिंहोऽपिक्षुत्क्षाम कण्ठः क्रुद्धो व्यचिन्तयत् 'अहो प्रातराशाय निःसत्त्वम्मया वनं कर्तव्यम्'। एवंचिन्तयतस्तस्य शशको मन्दं मन्दं गत्वा प्रणम्य तस्याग्रे स्थितः।

अथ तं प्रज्वलितात्मा भासुरक प्राह रे शशकाधम! एकतस्तु त्वंलघुः प्राप्तो, ऽपरतो वेलाति क्रमेणागतः। तस्मादपराधात्त्वान्निपात्य प्रातः सकलान्यपि मृगकुलानि उच्छेत्स्यामि। अथ शशकः सविनयं प्रोवाच, 'स्वामिन्! न अपराधो मम,नच सत्त्वानाम्। तत् श्रूयताङ्कारणम्' सिंह आह 'सत्वरं निवेदय, यावन्ममदंष्ट्रान्तर्गतो न भवान् भविष्यति'।

---

## नवमः पाठः

बुद्धेर्बलम्।

( ख )

( १ ) शशक आह "स्वामिन्! समस्तैः मृगैरद्य जातिक्रमेण मम लघुतरस्य प्रस्तावं विज्ञाय ततोऽहम्पंचशशकैः समम्प्रेषितः। ततश्च अहमागच्छन्नन्तराले महताकेनचिदपरेण सिंहेन विवरान्निर्गत्याभिहितः 'रे क प्रस्थिता यूयम्? अभीष्टदेवतां सम-

र'। ततोमयाऽभिहितं 'वयं स्वामिनो भासुरक सिंहस्य सकाशे आहारार्थं समयधर्मेण गच्छामः'। ततस्तेनाभिहितम् यद्येवन्तर्हि मदीयमेतद्वनम्, मया सह समयधर्मेण सर्वैः श्वापदैर्वर्तितव्यम्। चौररूपी स भासुरकः। ततः विश्वास स्थाने चतुरः शशकानत्र धृत्वा तमाहूय द्रुततरमागच्छ,येन यः कश्चिदावयोर्मध्यात्पराक्रमेण राजा भविष्यति स सर्वानेतान्भक्षयिष्यति'। ततोऽहम्भवत्सकाश मागतः, एतद्वेलातिक्रम कारणम्"। 100409

(२) तच्छ्रुत्वा भासुरक आह 'भद्र! यद्येवन्तत्सत्वरन्दर्शय मे तच्चौरसिंहम्। येनाहम्मृगकोपन्तस्योपरि क्षिप्त्वा स्वस्थो भवामि।। उक्तंचः—

भूमिर्मित्रं हिरण्यञ्च विग्रहस्य फलत्रयम्।
नास्त्येकमपि यद्येषा न्नतत्कुर्यात्कथंचन।।

शशक आहः—स्वामिन्! सत्यमिदम्। स्वभूमिहेतोः परिभवाच्च युध्यन्ते क्षत्रियाः। परं स दुर्गाश्रयः,दुर्गान्निष्क्रम्य तेन वयं विष्कम्भिताः। दुर्गस्थो हि दुःसाध्यो भवति रिपुः'।

तच्छुत्वा भासुरक आह 'भद्र! दुर्गस्थमपि दर्शय तं चौरसिहं येन व्यापादयामि। उक्तंच—

जातमात्र न्न यः शत्रुं व्याधिश्च प्रशमन्नयेत्।
अति पुष्टाङ्ग युक्तोऽपि स पश्चात्तेन हन्यते'।।

( ३ ) शशक आह 'अस्त्येतत्तथाऽपि बलवान्मया स दृष्टः। तत् न युज्यते स्वामिनस्तस्य सामर्थ्यमविदित्वागन्तुम्'।

भासुरक आह 'भो किन्तवानेन व्यापारेण, दर्शयमेतं दुर्गस्थमपि'।

शशक आह—'यद्येवन्तर्हि आगच्छतु स्वामी'

एवंचोक्त्वाऽग्रे प्रस्थितः। ततश्च तेनागच्छता यः कूपोदृष्टः तमेव कूपमासाद्य भासुरकमाह 'स्वामिन्! कस्तेप्रणयं सोढुं समर्थः। त्वां दूरत एव दृष्ट्वा प्रविष्टश्चौर सिंहः स्वन्दुर्गम्। तदागच्छतु स्वामी येन दर्शयामि'।

भासुरक आह 'दर्शय मे दुर्गम्'

तदनु दर्शितस्तेन कूपः। ततः सोऽपि मूर्खः सिंहः कूपमध्ये आत्म प्रतिबिम्बं जलमध्यगतन्दृष्ट्वा सिंहनादम्मुमोच। ततः प्रतिशब्देन कूपमध्याद्द्विगुणतरो नादः समुत्थितः। अथ तेन तं शत्रुम्मत्वा, भासुरक आत्मानन्तस्योपरिक्षिप्त्वा प्राणान्जहौ।

———

# दशमः पाठः

## अतिथि पूजनम् ।

### ( ख )

तस्यास्तद्वचनं श्रुत्वा धर्मयुक्ति समन्वितम् ।
उपगम्य ततोऽधृष्टः कपोतः प्राह लुब्धकम् ॥ १६ ॥
'भद्र ! सुखागतन्तेऽस्तु ब्रूहि किंकरवाणि ते' ।
'सन्तापश्च न कर्तव्यःस्वगृहे वर्तते भवान्' ॥ १७ ॥
तस्य तद्वचनं श्रुत्वा व्याधः प्राह विहंगमम् ।
'कपोत ? खलु शीतम्मे हिमत्राणं विधीयताम्' ॥ १८ ।
स गत्वांगारकम्भीत्वा दीपयामास पावकम् ।
ततःशुष्केषु पर्णेषु तमाशुः समदीपयत् ॥ १९ ॥
सुसन्दीप्तन्ततः कृत्वा तमाह शरणागतम् ।
'प्रतापय सुविश्रब्धं स्वगात्राण्यथ निर्भयः' ॥ २० ॥
'नत्वस्ति विभवः कश्चिन्नाशयानेन ते क्षुधम्' ॥ २१ ॥
सनिनिन्दकिलात्मानन्नतु तं लुब्धकम्पुनः ।
उवाच 'तर्पयिष्ये वा मुहूर्तम्प्रतिपालय' ॥ २२ ॥
एवमुक्त्का सधर्मात्मा प्रहृष्टेनान्तरात्मना ।
तमग्निं सम्परिक्रम्य प्रविवेश स्ववेशमवत् ॥ २३ ॥
ततस्तं लुब्धको दृष्ट्वाकृपया पीडितो भृशम् ।
कपोत मग्नौ पतितं वन्धुमेतद भाषत ॥ २४ ॥
'यः करोतिनरः पापं न तस्यात्मा ध्रुवम्प्रियः' ।

आत्मनः हि कृतम्पाप मात्मनैव हि भुज्यते ' ॥ २५ ॥
' सोऽहम्पाप गतिश्चैव पापकर्म्म रतः सदा ' ।
पतिष्यामि महाघोरे नारके नात्र संशयः ' ॥ २६ ॥
ततोयष्टिं शलाकाञ्च जालकम्पंजरन्तथा ।
बभंजलुब्धकादीनां कपोतीञ्च मुमोच ताम् ॥ २७ ॥

---

## एकादशः पाठः ।

### विद्यार्थिनः किमुचितम् ।

( ख )

( १ ) प्रातरूत्थानम्—यावन्तोऽपि महान्तः पुरुषाः संसारे सञ्जाता, स्ते सर्वेऽपि ब्राह्मे मुहूर्ते समुत्तिष्ठन्ति स्म । ऋषि र्दयानन्दः सर्वदा प्रभाते चतुर्वादन एव शय्यां विहाय नित्यकर्म्मणि प्रावर्वत । मनुनाऽपि प्रातरुत्थान मेवब्रह्मचारिणे समुपदिष्टम् ये जनाः प्रभाते सूर्य्योदयात्प्रागेव नोत्तिष्ठन्ति, ते सर्वस्मिन्नपि दिने आलस्य विकृतदृष्टयः शिथिलशरीराश्च तिष्ठन्ति । तेषान्न सर्वस्मिन्नपि दिवसे करणीयानि कार्य्याणि पूर्णतामायान्ति ।

( २ ) ये जनाः प्रभाते ब्राह्ममूहूर्ते शय्याञ्जहति, ते सर्वदा दीर्घायुषो भवन्ति । अप्रातरुत्थायी न क्वापि दीर्घायुर्निरीक्षितः प्रात-

त्थाय स्नानसन्ध्यादीनि नित्यकर्म्माणि विधाय,शीतकाल एव येऽध्ययनम्प्रारभन्ते,ते विलम्बोत्थायिभ्यो द्विगुणङ्कार्य्यमेकस्मिन्नहनि सम्पादयितुंशक्नुवन्ति। विशेषतो ब्रह्मचारिभिरवश्यमेव ब्राह्ममुहूर्ते समुत्थातव्यं, तस्मिन्काले समुत्थानं हि ब्रह्मचर्य्यरक्षायाः साधनम्भवति ।

( ३ ) ये प्रातः सूर्य्योदयात्प्रागेव समुत्तिष्ठन्ति,ते निरालस्याः क्रियासु लाघवेन प्रवर्तन्ते । आलस्यं हि जनस्य सर्वार्थघातकम् । आलस्यं हि मनुष्याणां शरीरस्थोमहा'न्रिपुः' । आलस्येन नरस्य समयो वृथाऽपयाति, पापे च सर्वदाऽऽलस्येनैव रतिर्भवति । यदा प्रभाते जागरण समयः स्यात्, झटिति जागरणीयम्, न च तदा क्षणमपि शय्यानिवेशः कर्तव्यः, यदि कृतस्तर्हि ज्ञातव्यम्भवता स्वसमयशरीरमनसां महती हानिः कृता ।

( ४ ) समयपालनम्—यः समयो यस्मै कार्य्याय नियतः, तस्मिन् समये तदेव कार्य्यंक्रियताम्, ये जनाः समयानुकूल्येन न वर्तन्ते, ते करणीयकार्य्यस्यार्द्धमपि न कर्तुम्पारयन्ति। यदा समये करणीयन्नकृत, न्तच्च पश्चात्कर्तुमारब्धम्, तस्मिन्क्रियमाणे तस्मिन्काले क्रियमाणमन्यत्कार्य्यमप्यकृतन्तिष्ठति, इत्येवङ्कार्य्यमनुधावत एव कालोयाति ।

(५) यदि भवानिच्छति यत्सर्वे भवन्तम्मानयेयुः, भवान्सर्वाणि करणीयानि कार्य्याणि कर्तुमनायासेनैव शक्नुयात्, तदा भवा-

नवश्यं समयम्परिपालयेत् । यदि भवता केनाप्यन्येन सह आलापं-कर्तुं समयोनिश्चितः,परम्भवान्काले नोपस्थितः, तदा न केवलम्भवतः कार्य्यस्य हानिः भवति, अपितु परस्यापि ।

( ६ ) एतदर्थम्प्रातर्जागरणस्य, समयपालनस्य चाभ्यासः कर्तव्यः । येनाभ्यासो न कृतः, स कथमपि नैतदुभयं कर्तुं शक्ष्यति । यदिभवान्बाल्ये नैतमभ्यासङ्करिष्यति, स्वाधिष्ठातृकृतम्प्रातरुत्थानं, चात्याचारत्वेन मंस्यते, तदा यौवनमपि भवतो ऽनिश्चितमालस्यसहितश्च भविष्यति । ब्रह्मचर्य्य-पालनाय चैतदुभयमावश्यकम् । एकस्य कर्म्मणो मुहुर्मुहुः करणेन यदि बाल्ये नाभ्यस्त, न्तर्हि तन्न यौवने कथमपि यत्नशतेनापि कर्तुं शक्यते ।

---

## द्वादशः पाठः

### बुद्धदेवः ।

( १ ) भूमण्डले यावतां धर्माणाम्प्रचारोऽस्ति, तेषु सर्वेष्वभ्यधिकाः मन्तारो बौद्धधर्मस्य सन्ति । चीनदेशे,, जापानदेशे,भारते, कोरियातिब्बतादि देशेषु च बौद्धदेशस्य क्वचिब्दहुः क्वचिच्चाल्पः प्रचारोऽस्ति । अस्य धर्मस्य संस्थापकः प्रख्यातो " बुद्धदेवः"

कपिलवस्तुराजस्य शुद्धोदनाख्यस्य क्षत्रियस्य पुत्रोऽभूत्। बाल्यकाले एव तस्य मनो विचारशीलमभूत्। स न सुखदायिषु वस्तुष्वरमत, परं कथम्मयाजीवनदुःखेभ्यो विमोक्षःप्राप्तव्यः इत्येव चिन्तयन्नतिष्ठत्।

( २ ) स एकदा जराजर्जरिताङ्गमेकं वृद्धं विलोक्य, सर्वैरेवईदृशैर्भाव्यमस्ति इति च ज्ञात्वा परन्निर्वेदमापन्नोऽचिन्तयत्किमनेन राज्यभोगेन, यत्रैतादृशी जराऽवश्यम्भाविनी। अतो मया कश्चिन्महात्मा ऽधिगन्तव्यो यो मे दुःखविमोचकम्मार्ग मुपदिशेदिति।

( ३ ) बुद्धदेवमेवं वैराग्योन्मुखमवेक्ष्य, तस्य पिता तं विषयेषुप्रवेष्टुं महान्तंयत्नमकरोत्। स तस्योद्वाह मप्यकरोत्। परन्तथापि बुद्धदेवस्य मनो न स्वकीयन्दृढविचारन्तत्याज! एकदा निशीथकाल एव, सपुत्रां स्वपत्नीं यशोधरां विहाय, चण्डाख्येन सूतेन समुपनीताश्वो राजकुलं विहाय वनं जगाम। तत्राश्वादवतीर्य्य, सर्वाण्याभरणानि, महार्घाणि वस्त्राणि च सूताय दत्वा, स्वयमेकाकी मुनिरूपो महात्मनां संगलिप्सया वनानि जगाहे।

(४) आदौ स कांश्चित्केवलं कर्मकाण्डिनोब्राह्मणानाप्य मुक्तिमार्गमपृच्छत्। ते 'तपसा ब्रह्म बोद्धव्य' मित्युक्त्वा, 'तपश्च देहाय क्लेशदान' मिति व्याख्याय तं शीतोष्णसहनाय दिदिशुः। बुद्ध-

देवोऽपि संजातश्रद्धः दुष्करं शारीरन्तपस्तेपे । परं ज्ञानाभावान्न किमपि फलं लेभे, न तस्यात्मज्ञान मभूत् । तदा स निष्फल-प्रयत्नः सन्नात्मनः मुक्ति मार्गमचिन्तयत् ।

(५) दीर्घध्यानात्तस्य मनसि यथार्थ ज्ञानमुदभूत् । सम्यगा-चरणेनैव मुक्तिर्भवतीति तस्य मतिरभूत् । तस्यैते मुख्या अष्टौ सिद्धान्ताः—

(१) परप्राणनाशो न कदापि कर्तव्यः । (अहिंसा)

(२) परस्यादत्तं वस्तु न ग्राह्यम् । (अस्तेयम्)

(३) मिथ्या न वक्तव्यम् । (सत्यम्)

(४) सुरादिपानन्न कर्तव्यम् । (ब्रह्मचर्य्यम्)

(५) ब्रह्मचर्य्यमाचरणीयम्—वीर्य्यहानिर्न कर्तव्या (ब्रह्मचर्य्यम्)

(६) उन्मादकं अपाच्यं चान्नं रात्रौ न भोज्यम् । (ब्रह्मचर्य्यम्)

(७) अति सुन्दराणि वस्त्राणि न परिधेयानि । (अपरिग्रहः)

(८) भूमौ वस्त्राच्छादनं विधाय शयनीयम् । (अपरिग्रहः)

पतंजलिरप्याह 'अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहाःयमाः' एतमेव चाष्टमार्गन्धर्मं मुक्ति हेतुम्मन्वानो बुद्धदेवः सर्वत्र उपदिदेश । स एव उपदेशः कालान्तरे बौद्धधर्माख्यामापत् । बुद्धदेवस्यानुभवाद्युष्मा-भिरपि लाभो ग्राह्यः ।

---

## त्रयोदशः पाठः ।



### सन्तोषः ।

सर्पाः पिबन्ति पवनञ्च च दुर्बलास्ते
शुष्कैस्तृणै र्वनगजाः बलिनो भवन्ति ।
कन्दैः फलै र्मुनिवराः गमयन्ति कालं
सन्तोष एव पुरुषस्य परन्निदानम् ॥ १ ॥

सन्तोषामृततृप्तानां यत्सुखं शान्तचेतसाम् ।
कुतस्तद्धनलुब्धाना मितश्चेतश्च धावताम् ॥ २ ॥

पीयूषमिव सन्तोष म्पिवतान्निर्वृ तिः परा ।
दुःखन्निरन्तरम्पुंसा मसन्तोषवताम्पुनः ॥ ३ ॥

दानेन तुल्यो विधिरस्ति नान्यो
लोभाच्च नान्योऽस्ति रिपुः पृथिव्याम् ।
विभूषणं शीलसमन्न चान्यत्
सन्तोष तुल्यन्धनमस्ति नान्यत् ॥ ४ ॥



# चतुर्दशः पाठः ।

## वंचककथा ।

१ कस्मिंश्चिद्वनप्रदेशे चण्डरवो नाम शृगालः प्रतिवसति स्म । स कदाचिज्जिव्हालौल्यात् क्षुधाविष्टो नगरान्तरंगतः । अथ तन्नगरनिवासिनः सारमेया अवलोक्य शब्दायमानाः परिधाव्य तीक्ष्णदंष्ट्राग्रै र्भक्षितुमारब्धाः । सोऽपि तैर्भक्ष्यमाणः प्राणभयात्प्रत्यासन्नरंजकगृहम्प्रविष्टः । तत्र नीली रस परिपूर्णं महाभाण्डं सज्जीकृतमासीत् । तत्र सारमेयैराक्रान्तो भाण्डमध्ये निपतितः । अथ यावन्निष्क्रान्तस्तावन्नीलीवर्णः सञ्जातः । तत्रापरे सारमेयास्तं शृगालमजानन्तो यथाभीष्टं दिशञ्जग्मुः । चण्डरवोऽपि दूरतरम्प्रदेशमासाद्य काननाभिमुखम्प्रतस्थे । न च नीलीवर्णेन कदापि निजरङ्गस्त्यज्यते ।

२. अथ तन्तमालेन समप्रभमपूर्वं सत्त्वमवलोक्य सर्वे सिंह व्याघ्र द्वीपि वृक प्रभृतयोऽरण्यनिवासिनो भयेन व्याकुल-चित्ताः समन्ततःपलायनक्रियाङ्कुर्वन्ति,कथयन्ति च, न ज्ञायतेऽस्यकीदृग्विचेष्टितम्पौरुषञ्च । तद् दूरतरङ्गच्छामः ।

चण्डरवोऽपि तान्भयव्याकुलितान्विज्ञाय इदमाह "भो भो श्वापदाः ! किं यूयं मान्दृष्ट्वैव सन्त्रस्ता व्रजथ । तन्न भेतव्यम् । अहमद्य स्वयमेव ब्रह्मणा सृष्ट्वाभिहितः 'यच्छ्वापदाना म्मध्ये

कोऽपि राजानास्ति, तत्त्वम्मयाऽद्य सर्वश्वापदप्रभुत्वेऽभिषिक्तः ककुद्द्रुमाभिधः । ततो गत्वा क्षितितले तान् सर्वान्पालयेति' ततोऽहमत्रा गतः तन्मम छत्रच्छायायां सर्वैरपिश्वापदै र्वर्तितव्यम्" ।

३. तत् श्रुत्वा सिंहव्याघ्रपुरःसरा श्वापदाः "स्वामिन् ! प्रभो ! समादिश" इति वदन्तस्तं परिवव्रुः । अथ तेन सिंहस्यामात्यपदवी प्रदत्ता, व्याघ्रस्य शय्यापालत्वं, द्वीपिन स्ताम्बूलाधिकारः, वृकस्य द्वारपालकत्वं, ये चात्मीयाः शृगाला स्तैः सहालापमात्रमपि न करोति । शृगाला सर्वेऽप्यर्धचन्द्रन्दत्वा निःसारिताः । एवन्तस्य राज्यक्रियायां विद्यमानस्य ते सिंहादयो मृगान्व्यापाद्य तत्पुरतः क्षिपन्ति । सोऽपि प्रभुधर्मेण सर्वेषान्तान्प्रविभज्य प्रयच्छति ।

४. एवंगच्छति काले, कदाचित्तेन समागतेन दूरदेशे शब्दायमानस्य शृगालवृन्दस्य कोलाहलोऽश्रावि । तं शब्दं श्रुत्वा स पुलकिततनुः आनन्दाश्रुपरिपूर्णनयनः उत्थाय तारस्वरेण विरोतुमारब्धवान् । अथ ते सिंहादय स्तं तारस्वरमाकर्ण्य शृगालोऽयमिति ज्ञात्वा, सलज्जमधोमुखाः क्षणमेकं स्थित्वा मिथः प्रोचुः 'भो वाहिता वयमनेन क्षुद्र शृगालेन, तद्वध्यतामिति' सोऽपि तदाकर्ण्य पलायितुमिच्छन्,तत् स्थान एव सिंहादिभिः खण्डशः कृतो मृतश्च ।

# पञ्चदशः पाठः

## भारत दशा ।

(१) वर्तमानकालेऽस्मदीयजन्मभूमे भारतस्य अति शोचनीया, परिहर्तव्या च दशा वर्तते । युष्माभिः प्रत्यहं प्रत्यक्षी क्रियते, यन्न कोऽपि विचक्षणो भारतीयः स्वदेशस्य दशाविषये सन्तुष्टचेता वदति । सर्वोऽपि मतिमान् जनो भारतस्य विद्यमानान्दशां कष्टहेतुं मन्यते वर्णयति च । कोऽत्र हेतुः ? केन हेतुना वयं सर्वेऽपि भारतीयाः मनुष्यसमाजे महतीं नीचामवस्थामापन्नाः ? अस्माकम्पूर्वजाःकिल सर्वस्य जगतो महामान्याः, पुण्यकीर्तयः,समस्तदेशानान्धर्मगुरव श्चासन् । कथन्नाम वयं तेषां सर्वमपि गुण गौरवं नाशितवन्तः ? किमस्माकमधः पातस्य कारणम् ?

(२) अस्माकं शरीराण्यतिमात्रन्निर्बलानि, समुत्साह शक्तौ-अक्षमाणि, चिरं कार्य्यकरणाया पर्य्याप्तानि, बहुशः घातकरोगग्रस्तानि च सन्ति । भारतीयानां वपूंषि दृश्यन्ताम् । नारोगङ्कस्यापि वपुर्लक्ष्यते, लक्ष्यते चेत्सहस्रेष्वेकस्य । कोऽत्र हेतुः ? ब्रह्मचर्य्यस्यापरिपालनमेव तत्र हेतु' । यूयं सर्वेऽपि ब्रह्मचर्य्ये व्रते स्नाता नाभिषिक्तान च पुण्यजन्मानः स्थ । ब्रह्मचर्य्य हानादेव वयम्भीमार्जुनवंशजाः कीटसमकायताम्प्राप्ताः, तस्य ब्रह्मचर्य्यस्य परिपालनाय प्रतिज्ञामाला युष्माकं शिर-

सि पिनद्धाऽस्ति, सा युष्माभिर्न भङ्क्तव्या । देशोन्नतिस्तदैव सम्भाव्यते, नेतरथा ।

(३) अस्मद्देशस्य आर्थिकदशाऽप्यतिविचारणीयाऽस्ति । तत्र सन्ति तावदनेकसहस्राणि जनानां, यानि तावदहनि प्रातराशमप्यलभमानानि, भृशमाक्रन्दमानानि, निराशतामापन्न निज जीवितैर्विरहितानि भवन्ति । न ते जनाः किञ्चित्कौशलं जानन्ति, न ते कुतोऽपि कलाशिक्षां लभन्ते, कथं हि नाम ते जीवनवृत्तिं धारयेयुः ? नास्ति कोऽपि भगवन्तं विना तेषां दीनस्वरस्य श्रोता पालको वा । तमेव प्रतिक्षणं स्मरन्त स्ते स्वजन्मभूमेः स्वबन्धुभ्यश्च वियुज्यन्ते, कोऽत्र हेतुः ?

(४) प्रथमं तावत्तेषामशिक्षितत्वमेव तत्र हेतुः । तदर्थं युष्माभिः, सर्वप्रयत्नैः, स्वार्थ मपहाय, त्यागवृत्तिं धारयित्वा तेषां शिक्षणं कर्तव्यम् । न केवलं स्वात्मशक्तिसम्पादनाय युष्माभिः साधनानि करणीयानि, सर्वोद्यमेन परेषां उपकारोऽपि विधेयः ।

अपरस्तेषान्दीनदशाया हेतुः तन्निर्मितवस्तूनाञ्जनैरनादर एव । ते हि अमृदु, असमुज्ज्वलं च वस्त्रं निर्मिमते, तद्द बहुमूल्यं भवति, न च कोपि भारतीयो गृह्णाति । अपरदेशीयम्पुनरतिमृदु अत्युज्ज्वलमल्पमूल्यञ्च वसनं क्रीणते । कथं

तेषामधनानामुदरपूर्तिं भवेत् ?

५ अस्मद्देशीयानामाचारा अपि नातिप्रशस्ताः सन्ति। धर्मस्य समुचित आदरो नास्मद्देशे जनेषु लक्ष्यते। तदेव च मुख्यमस्मद्देशस्याधःपातस्य कारणम्। युष्माभिरवश्यं धर्मपालनं विधेयम्। कः पुनर्धर्मः ?

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकन्धर्मलक्षणम ॥

---

# षोडशः पाठः ।

## रामायणम् ( क )

कोसलो नाम मुदितः स्फीतो जनपदो महान् ।
निविष्टः सरयूतीरे प्रभूतधनधान्यवान् ॥ १ ॥
अयोध्या नाम नगरी तत्रासील्लोकविश्रुता ।
मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम् ॥ २ ॥
तान्तु राजा दशरथो महाराष्ट्रविवर्धनः ।
पुरीमावासयामास समृद्धान्धनधान्यतः ॥ ३ ॥
मन्त्रज्ञाश्चेङ्गितज्ञाश्च नित्यम्प्रियहितेरताः ।
अष्टौ बभुवुर्वीरस्य तस्यामात्या यशस्विनः ॥ ४ ॥
तस्य राज्ञः प्रवीरस्य धर्मज्ञस्य महात्मनः ।
सुतार्थं न्तप्यमानस्य नासीद्वंशकरः सुतः ॥ ५ ॥
यज्ञेन हयमेधेन ऋष्यशृङ्गमयाजयत् ।
आत्मनः सुतलाभाय स राजा वंशकारणात् ॥ ६ ॥
यज्ञलब्धम्पयःपात्र न्निजपत्निषु भूपतिः ।
अर्धमर्द्धार्द्धमर्द्धार्द्ध मिति कृत्वा ददौ स्वयम् ॥ ७ ॥
कौसल्याऽजनयद्रामं कैकेय्याम्भरतोऽ भवत् ।
अथ लक्ष्मण शत्रुघ्नौ सुमित्रा सुषुवे यमौ ॥ ८ ॥
समानेऽपि हि सौभ्रात्रे यथोभौ रामलक्ष्मणौ ।
तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं बभूवतुः ॥ ९ ॥

कदाचिद्राक्षसैर्ध्वस्त-समस्ताध्वरविस्तरः ।
रक्षार्थै नृपमापेदे विश्वामित्रो महामुनिः ॥ १० ॥
अनिच्छन्नपि धर्मार्थं पुत्रौ संप्रैषयन्नृपः ।
तर्ज्यमानः प्रचण्डेन ब्राह्मणस्याथ तेजसा ॥ ११ ॥
मुनेराश्रम मभ्येत्य पवित्रं रामलक्ष्मणौ ।
क्रूरौ सुबाहुमारीचौ चक्रतुः सुपराजितौ ॥ १२ ॥
आद्योयमालयम्भेजे द्वितीयो वरुणालयम् ।
मुने स्तदनु निर्विघ्नं हविः प्राय सुरालयम् ॥ १३ ॥

---

## सप्तदशः पाठः

### रामायणम् ( ख )

श्रुत्वा यज्ञावसाने तौ मिथिलायां स्वयंवरम् ।
विश्वामित्रो मुनिस्तत्र निनाय युवरूपिणौ ॥ १४ ॥
येन विश्लेषितो गर्वग्रन्थिः सकलभूभृताम् ।
तदनु लीलया रामो बभञ्ज प्रथितं युवा ॥ १५ ॥
सधनुर्भङ्ग शुल्केन केवलं न सितं यशः ।

मिथिलाराजतनयां सीतामप्याप्तवांस्ततः ॥ १६ ॥

सवयस्कं सपत्नीकं सयशःसौरभंसुतम् ।
तम्पिता जगतीराज्ये नियोक्तुम्सोद्यतोऽभवत् ॥१७॥

अक्षमा वंचिता दास्या कैकेयी ममृषे न तत् ।
राज्ञा प्रवासयामास रामं सस्त्रीकसानुजम् ॥ १८ ॥

पूर्वप्रदत्तवरयुग्मवशंवदेन,
राज्ञा वनाय स किल प्रहितो मनस्वी ।
भूराज्यदण्डमखिलंमनसा विहाय,
शिश्राय दण्डक वनं भरतस्य भूत्यै ॥ १६ ॥

सौमित्रिणा सेव्यमानो मोद्यमानश्च सीतया ।
वन्यैः पुष्पैः पोष्यमाणो रामः काल मयापयत् ॥ २० ॥

तत्रासौ वन्यसिंहादी नाक्षसाँश्च व्यनाशयत् ।
सम्पत्तौ वा विपत्तौ वा सन्तो लोकहिते रताः ॥२१॥

स्वबान्धवनिघातेन रोषितो राक्षसेश्वरः ।
लङ्काधिपश्छलात्सीतां रावणः समुपाहरत् ॥ २२ ॥

तामन्विष्यन्महत्सैन्यं वन्यानाम्परिगृह्य सः ।
रामो दाशरथिर्लङ्कां वीरहीनां पराजयत् ॥ २३ ॥

वीरं रक्षोगणैर्युक्तं नाशकर्मणि शिक्षितम् ।
विभास्वानिव तामिस्रं रामो रावण मार्दयत् ॥ २४ ॥

लङ्काराज्यन्ददौ रामो भ्रात्रे रक्षःपतेः स्वयम् ।

अधर्मसंहननार्थेव प्रवृत्तिर्भुवि तादृशाम् ॥ २५ ॥

विनाश्य रक्षांसि विधाय मङ्गलम्
प्रियां विपत्तेः रक्षतार्य्य यत्नतः
प्रमोदय त्सर्वजगन्ति राघवः
स्तमांसि निर्धूय यथा निशाकरः ॥२७ ॥

---

## अष्टादशः पाठः ।

### अशोकः ।

१ पुरा किलास्मिन्भारते वर्षे, भारतीयानामार्य्याणामेव राज्यमासीत् । तस्मिंश्च राज्ये विद्यावैभवसमृद्धाः सर्वाः प्रजाः सानन्दं कालं यापयामासुः । ते हि पुरातना राजानो धर्मपरायणा, बलशक्तिसमन्विताः प्रजाहितेच्छयैव साम्राज्यमकार्षुः । तेष्वन्यतमो-राजाऽशोको बभूव । असौ हि राजा, मौर्य्यवंशाङ्कुरं चन्द्रगुप्तपौत्रः विक्रमादित्यात्पञ्चदशाधिक द्विशत वर्षाणि पूर्वं, सकल भरतखण्ड-राज्यधान्याम्पाटलिपुत्र नाम्नि नगरे वसन्निदं वर्षमशासत् ।

२, असौ हि राजास्वजन्मनः पूर्वभागे क्रूरो नृशंसश्चासीत् स्वपितरिमृत्युमुपागते, स्वभ्रातृननाहत्य समुच्छिद्य च तेभ्यो राज्याधिकार मुपलब्धवान्। एतत्पितामहस्य चन्द्रगुप्तस्यौजसा, तस्मिन्काले सर्वम्भरतखण्ड मुत्तरदिगन्तवर्तिनोऽन्ये च देशाः,पाटलिपुत्रेश्वराणामेव च्छत्रच्छायाश्रया आसन्। एवञ्च स्ववीर्य्यभूम्नाऽशोको न केवलं सर्वम्भरतखण्डमेव, अपितुतदन्तिकस्थानन्यानपि प्रदेशानतः कालाद्द्विशतिशतवर्षाणिपूर्वम्पाटलिपुत्रस्थ एवएकपुरीमिव शशास।

( ३ ) पितामहबलोपार्जितं साम्राज्यम्प्राप्यापि नास्य राज्ञः शान्तिरभूत। अतो राज्यप्राप्त्यनन्तरमयं कलिङ्गान्विजेतुं ससैन्यः प्रतस्थे। कलिङ्गराजः स्वसैन्यसहायोघोरं युद्धंप्रावर्तयत्। सहस्राणि जनानाङ्क्षयमीयुः अनेके ब्राह्मणा गुरुवत्पूज्याश्च क्षयमवाप्नुवन्। अन्ये चाप्यनेके निःसहायादीनाश्च सन्तो भोजन विहीना अस्थिमात्र शेषा इतस्ततः पर्य्यटन्तो युद्धस्य दुष्फलानि स्पष्टम्प्रादर्शयन्। एतन्निरीक्ष्या शोकस्य कठोरमपि हृदयमद्रवत्। दुःखितान्तःकरणश्च हिंसा प्रतिषेधकम्बौद्धधर्ममाशिश्राय।

( ४ ) बौद्धधर्ममाश्रित्य, अशोकः कृपया धर्मेण च प्रजामपालयत्। तस्य राज्ये सर्वत्र शान्तिः स्थापिताऽभूत्। बौद्धधर्मप्रचाराय स बहून धर्मोपदेशकान् नाना देशेषु प्राहिणोत्-

स्थाने स्थाने शिलालेखैः स्तम्भलेखैश्च स्वीयान्धार्मिकविचारान्प्रादर्शयत् ।

'प्रेमविजय एव विजयः, शस्त्रविजयस्त्वविजय' इति तस्य दृढो निश्चयोऽभूत् ।



